





श्रीमत् वेदान्त रामानुज मुनि करुणालब्ध वेदान्त युग्मम्
श्रीमत् श्रीवास योगीश्वर गुरुपदयोर्पित स्वात्मभारम्
श्रीमत् श्रीरङ्गनाताह्वय मुनिकृपया प्राप्त मोक्षाश्रमं तं
श्रीमत् वेदान्त रामनुज मुनिमपरम् संश्रये देशिकेन्द्रम्



श्रीमत् श्रीवास योगीश्वर मुनि करुणालब्ध वेदान्त युग्मम्
श्रीमत् वेदान्त रामानुज गुरुपदयोर्पित स्वात्मभारम्
श्रीमत् श्रुत्यन्त रामानुज यति नृपतेः प्राप्त मोक्षाश्रमं तं
श्रीमत् श्रीवास रामनुजमुनिं संश्रये ज्ञानवार्धिम्



वेदान्त लक्ष्मण मुनीन्द्र कृपात्त बोधम्
तत्पाद युग्म सरसीरुह भृङ्गराजम्
त्रय्यन्त युग्म कृतभूरि परिश्रमं तं
श्रीरङ्ग लक्ष्मणमुनिम् शरणं प्रपद्ये

# पञ्च सूक्तम्

***pa~ncha sUktam***

# पञ्च सूक्तम्

## ॥ पुरुषसूक्तम् ॥

॥ हरिः ओ(४)म् ॥

सहस्र शीर्षा पुरुषः । सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्-दशाङ्गुलम् ॥

पुरुष एवेद२ सर्वम् । यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानः । यदन्नेनातिरोहति ॥

एतावानस्य महिमा । अतो ज्याया२श्च पूरुषः ।
पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि ॥

त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाभवात्पुनः ।
ततो विष्वङ्-व्यक्रामत् । साशनानशने अभि ॥

तस्माद्-विराडजायत । विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत । पश्चाद्-भूमिमथो पुरः ॥

यत्पुरुषेण हविषा । देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मः शरद्-धविः ॥

सप्तास्यासन्परिधयः । त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वानाः । अबध्नन्पुरुषं पशुम् ॥

# पञ्च सूक्तम्

तं य॒ज्ञं ब॒र्हिषि॒ प्रौक्ष॑न् । पुरु॑षं जा॒तम॑ग्र॒तः ।
तेन॑ दे॒वा अय॑जन्त । सा॒ध्या ऋष॑यश्च॒ ये ॥

तस्मा᳚द्-य॒ज्ञात्स॑र्व॒हुत॑ः । संभृ॑तं पृषदा॒ज्यम् ।
प॒शूꣳस्ताꣳश्च॑क्रे वाय॒व्यान्॑ । आ॒र॒ण्यान्ग्रा॒म्याश्च॒ ये ॥

तस्मा᳚द्-य॒ज्ञात्स॑र्व॒हुत॑ः । ऋचः॒ सामा॑नि जज्ञिरे ।
छन्दा॑ꣳसि जज्ञिरे॒ तस्मा᳚त् । यजु॒स्तस्मा॑दजायत ॥

तस्मा॒दश्वा॑ अजायन्त । ये के चो॑भ॒याद॑तः ।
गावो॑ ह जज्ञिरे॒ तस्मा᳚त् । तस्मा᳚ज्जा॒ता अ॑जा॒वय॑ः ॥

यत्पुरु॑षं॒ व्य॑दधुः । क॒ति॒धा व्य॑कल्पयन् ।
मुखं॒ किम॑स्य॒ कौ बा॒हू । कावू॒रू पादा॑वुच्येते ॥

ब्रा॒ह्म॒णो᳚ऽस्य॒ मुख॑मासीत् । बा॒हू रा॑ज॒न्य॑ः कृ॒तः ।
ऊ॒रू तद॑स्य॒ यद्वैश्य॑ः । प॒द्भ्याꣳ शू॒द्रो अ॑जायत ॥

च॒न्द्रमा॒ मन॑सो जा॒तः । चक्षो॒ः सूर्यो॑ अजायत ।
मुखा॒दिन्द्र॑श्चा॒ग्निश्च॑ । प्रा॒णाद्-वा॒युर॑जायत ॥

नाभ्या॑ आसीद॒न्तरि॑क्षम् । शी॒र्ष्णो द्यौः सम॑वर्तत ।
प॒द्भ्यां भूमि॒र्दिश॒ः श्रोत्रा᳚त् । तथा॑ लो॒काꣳ अ॑कल्पयन् ॥

वेदा॒हमे॒तं पुरु॑षं म॒हान्त᳚म् । आ॒दि॒त्यव॑र्णं॒ तम॑सस्तु॒ पा॒रे ।
सर्वा॑णि रू॒पाणि॑ वि॒चित्य॒ धीर॑ः । नामा॑नि कृ॒त्वाऽभि॒वद॒न् यदास्ते᳚ ॥

# पञ्च सूक्तम्

धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ॥

यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ॥

अद्भ्यः संभूतः पृथिव्यै रसाच्च । विश्वकर्मणः समवर्तताधि ।
तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे ॥

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् ।
तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय ॥

प्रजापतिश्चरति गर्भे अन्तः । अजायमानो बहुधा विजायते ।
तस्य धीराः परिजानन्ति योनिम् । मरीचीनां पदमिच्छन्ति वेधसः ॥

यो देवेभ्य आतपति । यो देवानां पुरोहितः ।
पूर्वो यो देवेभ्यो जातः । नमो रुचाय ब्राह्मये ॥

रुचं ब्राह्मम् जनयन्तः । देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन् वशे ॥

ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे ।
नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् ॥

इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण ॥ ॥ हरिः ओ(३)म् ॥

# पञ्च सूक्तम्

## ॥ नारायणसूक्तम् ॥

॥ हरिः ओ(४)म् ॥

सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं प्रभुम् ।

विश्वतः परमं नित्यं विश्वं नारायणꣳ हरिम् ।
विश्वमेवेदं पुरुषस्-तद्विश्व-मुपजीवति ।

पतिं विश्वस्यात्मेश्वरꣳ शाश्वतꣳ शिवमच्युतम् ।
नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।

नारायण परं ब्रह्म तत्वं नारायणः परः ।
नारायण परो ज्योतिरात्मा नारायणः परः ।

यच्च किञ्चिज्-जगत्यस्मिन्-दृश्यते श्रूयतेऽपि वा ॥

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।
अनन्तमव्ययं कविꣳ समुद्रेऽन्तं विश्वशम्भुवम् ।

पद्म कोश प्रतीकाशꣳ हृदयं चाप्यधोमुखम् ।
अधो निष्ट्या वितस्यान्तु नाभ्यामुपरि तिष्ठति ।

हृदयं तद्विजानीयाद् विश्वस्यायतनं महत् ।
सन्ततꣳ सिराभिस्तु लम्बत्या कोशसन्निभम् ।

# पञ्च सूक्तम्

तस्यान्ते सुषिरꣳ सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् ।
तस्य मध्ये महानग्निर्-विश्वार्चिर्-विश्वतोमुखः ।

सोऽग्रभुग् विभजन्तिष्ठन्-नाहारमजरः कविः ।
सन्तापयति स्वं देहमापादतलमस्तकम् ।

तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः ।
नीलतो-यदमध्यस्था विद्युल्लेखेव भास्वरा ।

नीवारशूकवत्तन्वी पीता भास्यात्तनूपमा ।
तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।

स ब्रह्म स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥

ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः ॥

***ओं नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥***

॥ हरिः ओ(३)म् ॥

# पञ्च सूक्तम्

## ॥ विष्णुसूक्तम् ॥

॥ हरिः ओ(४)म् ॥ विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णोरराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्त्रेस्थो विष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा ॥

तदस्य प्रियमभिपाथो अश्याम् । नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था । विष्णोः पदे परमे मध्व उथ्सः ।
प्रतद्-विष्णुस्तवते वीर्याय । मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेषु । अधिक्षियन्ति भुवनानि विश्वा ।
परो मात्रया तनुवा वृधान । न ते महित्वमन्वश्नुवन्ति ॥

उभे ते विद्म रजसि पृथिव्या विष्णो देवत्वम् । परमस्य विथ्से ।
विचक्रमे पृथिवीमेष एताम् । क्षेत्राय विष्णुर्मनुषे दशस्यन् ।
ध्रुवासो अस्य कीरयो जनासः । उरुक्षितिं सुजनिमाचकार ।
त्रिर्देवः पृथिवीमेष एताम् । विचक्रमे शतर्चसं महित्वा ।
प्रविष्णुरस्तु तवसस्तवीयान् । त्वेषग्ग् ह्यस्य स्थविरस्य नाम ॥

अतो देवा अवन्तुनो यतो विष्णुर्विचक्रमे । पृथिव्यास्सप्त धामभिः
इदं विष्णुर्-विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ।
त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । ततो धर्माणि धारयन् ।
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यस्सखा ॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ।
तद्विप्रासो विपन्यवो जागृवांस स्समिन्धते । विष्णोर् यत्-परमं पदम् ॥ ॥ हरिः ओ(३)म् ॥

# पञ्च सूक्तम्

## ॥ श्रीसूक्तम् ॥

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥

अश्वपूर्वां रथमध्यां हस्तिनाद प्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मादेवी जुषताम् ॥

कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मे स्थितां पद्मवर्णां त्वामिहोपह्वये श्रियम् ॥

चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मनेमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥

आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥

उपैतु मां देवसखः कीर्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीर्-नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥

# पद्म सूक्तम्

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीꣳ सर्वभूतानां तामिहोपह्वये श्रियम् ॥

मनसः काममाकूतिं वाचस्-सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥

कर्दमेन प्रजाभूता मयि सम्भव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥

आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥

आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥

आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥

पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदळायताक्षि ।
विश्वप्रिये विष्णु मनोऽनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥

श्रियै जात श्रिय आनिर्याय श्रियं वयो जनितृभ्यो दधातु ।
श्रियं वसाना अमृतत्वमायन् भवन्ति सद्यः समिधा मितद्यून् ॥

# पञ्च सूक्तम्

श्रिय एवैनं तच्छ्रियमादधाति ।

सन्ततमृचा वषट्कृत्यं सन्धत्तं सन्धीयते प्रजया पशुभिः ॥

य एवं वेद ॥

*ओं महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥*

# पञ्च सूक्तम्

## ॥ भूसूक्तम् ॥

भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा । उपस्थे ते देव्यदितेऽग्निमन्नाद-मन्नाद्यायादधे ।
आऽयङ्गौः पृश्निरक्रमी दसनन्मातरं पुनः । पितरं च प्रयन्थ्सुवः ।
त्रिꣳ शद्धाम विराजति वाक्पतङ्गाय शिश्रिये । प्रत्यस्य वह द्युभिः ।
अस्य प्राणाद-पानत्यन्तश-चरति रोचना । व्यख्यन् महिषः सुवः ।
यत्वा क्रुद्धः परो वप मन्युना यदवर्त्या । सुकल्पमग्ने तत्तव पुनस्त्वोद्-दीपयामसि ।
यत्ते मन्युपरोप्तस्य पृथिवी-मनु-दध्वसे । आदित्या विश्वे तद्-देवा वसवश्च समाभरन् ।

मेदिनी देवी वसुन्धरा स्याद्वसुधा देवी वासवी । ब्रह्मवर्चसः पितृणाग् श्रोत्रं चक्षुर्मनः ।
देवी हिरण्यगर्भिणी देवी प्रसूवरी । सदने सत्यायने सीद ।
समुद्रवती सावित्री हनो देवी मह्यङ्गी । महीधरणी महो व्यतिष्ठाः श्रृङ्गे श्रृङ्गे
यज्ञे यज्ञे विभीषिणी । इन्द्रपत्नी व्यापिनी सुरसरिदिह ।
वायुमती जलशयनी श्रियंधा राजा सत्यन्धो परिमेदिनी । श्वोपरिधत्तं गाय ।

विष्णुपत्नीं महीं देवीं माधवीं माधवप्रियाम् ।
लक्ष्मी प्रियसखीं देवीं नमाम्यच्युत वल्लभाम् ।

***ओं धनुर्धराय विद्महे सर्वसिद्ध्यै च धीमहि । तन्नो धरा प्रचोदयात् ॥***

श्रृण्वन्ति श्रोणाममृतस्य गोपाम् । पुण्यामस्या उप श्रृणो मिवाचम् ।
महीं देवीं विष्णुपत्नीमजूर्याम् । प्रतीची मेनाꣳ हविषा यजामः ।
त्रेधा विष्णुरुरुगायो विचक्रमे । महीं दिवं पृथिवीमन्तरिक्षम् । तच्छ्रोणैति श्रव इच्छमाना ।
पुण्यग्ग श्लोकं यजमानाय कृण्वती ।

# पञ्च सूक्तम्

## ॥ नीळासूक्तम् ॥

नीळां देवीꣳ शरणमहं प्रपद्ये सुतर सितरसे नमः ।

गृणाहि ॥

घृतवती सवितराधिपत्यैः पयस्वती रन्तिराशानो अस्तु ।
ध्रुवा दिशां विष्णुपत्न्यघोराऽस्येशाना सहसो या मनोता ।
बृहस्पतिर्मातरिश्वोत वायुस्-सन्धुवाना वाता अभि नो गृणन्तु ।
विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नी ॥

*ओं महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि । तन्नो नीळा प्रचोदयात् ॥*